॥ श्रीकृष्णस्य सप्तदशाक्षरो मन्त्रः ॥

श्रीकृष्णमन्त्रकवचम्

श्रीगणेशाय नमः ।
महादेव उवाचः ।
ॐ श्रीं नमः श्रीकृष्णाय परिपूर्णतमाय च ।
मन्त्रेषु मन्त्रराजोऽयं महान् सप्तदशाक्षरः ॥ १॥

सिद्धोऽयं पञ्चलक्षेण जपेन मुनिपुङ्गव ।
तद्दशांशं च हवनं तद्दशांशाभिषेचनम् ॥ २॥

तर्पणं तद्दशांशं च तद्दशांशं च मार्जनम् ।
सुवर्णानां च शतकं पुरश्चरणदक्षिणा ॥ ३॥

मन्त्रसिद्धस्य पुंसश्च विश्वं करतलं मुने ।
शक्तः पातुं समुद्रांश्च विश्वं संहर्तुमीश्वरः ।
पाञ्चभौतिकदेहेन वैकुण्ठं गन्तुमीश्वरः ॥ ४॥

तस्य संस्पर्शमात्रेण पादपङ्कजरेणुना ।
पूतानि सर्वतीर्थानि सद्यः पूता वसुन्धरा ॥ ५॥

॥ श्रीकृष्णस्य सप्तदशाक्षरो मन्त्रः समाप्तम् ॥